# मन्दात्मकं मारुतिस्तोत्रम्

ॐ नमो वायुपुत्राय भीमरूपाय धीमते ।
नमस्ते रामदूताय कामरूपाय श्रीमते ॥ १॥

मोहशोकविनाशाय सीताशोकविनाशिने ।
भग्नाशोकवनायास्तु दग्धलङ्काय वाग्मिने ॥ २॥

गतिनिर्जितवाताय लक्ष्मणप्राणदाय च ।
वनौकसां वरिष्ठाय वशिने वनवासिने ॥ ३॥

तत्त्वज्ञानसुधासिन्धुनिमग्नाय महीयसे ।
आञ्जनेयाय शूराय सुग्रीवसचिवाय ते ॥ ४॥

जन्ममृत्युभयघ्नाय सर्वक्लेशहराय च ।
नेदिष्ठाय प्रेतभूतपिशाचभयहारिणे ॥ ५॥

यातनानाशनायास्तु नमो मर्कटरूपिणे ।
यक्षराक्षसशार्दूलसर्पवृश्चिकभीहृते ॥ ६॥

महाबलाय वीराय चिरञ्जीविन उद्धते ।
हारिणे वज्रदेहाय चोल्लङ्घितमहाब्धये ॥ ७॥

बलिनामग्रगण्याय नमो नमः पाहि मारुते ।
लाभदोऽसि त्वमेवाशु हनुमन् राक्षसान्तक ।
यशो जयं च मे देहि शत्रून्नाशय नाशय ॥ ८॥

श्रीवासुदेवानन्दसरस्वती ।

सङ्गीतेन वशीकरोति वरदं क्ष्माजाधवं राघवं
यश्चामीकरचारुगात्रसुषमां विस्तारयत्यद्भुताम् ।
नानातालकलाकलापनिपुणः कौशन्यवद्गायति
स प्रीणातु प्रशस्तगानरसिकव्यामोदिशाखामृगः ॥

सङ्गीतपारिजततः ।
दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ १०॥

रामराक्षास्तोत्रतः ।
मारुतिं वीरवज्राङ्गं भक्तरक्षणदीक्षितम् ।
हनुमन्तं सदा वन्दे राममन्त्रप्रचारकम् ॥ ११॥

हनुमन्नञ्जनासूनो वायुपुत्र महाबल ।
अकस्मादागतोत्पातं नाशयाशु नमोऽस्तु ते ॥ १२॥

कुतोऽपि - (सोउर्चे उन्क्नोव्न्)
उद्यन्मार्तण्डतेजःप्रसरपरिगतारक्तमेरुप्रभाभं
वज्रप्रान्तानुकारि प्रखरनखमुखाघात सन्दारितारिम् ।
लोलल्लाङ्गूल लीलालुलित खलदलोद्दाम दर्पान्धनाकं
कालं क्रूरग्रहाणां शतभयशमनं नौमि वायोः सुबालम् ॥ १२॥

धीरं धीरं धरित्रीं पदकमलमुखन्याससम्पीडयन्तं
निक्वाणैर्नाशयन्तं निखिलकलिमलं तालजैः कङ्कणानाम् ।
गायन्तं राम रामेत्यतिरतिरभसैः राघवं संस्मरन्तं
सङ्गीताचार्यवर्यं कविकुलतिलकं मारुतिं नौमि वीरम् ॥ १४॥

कूर्मो मूलवदालवालवदपां नाथो लतावद्दिशो

मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः ।

स्वामिन् ! व्योमतरुर्मम क्रमतले श्रुत्वेति गां मारुतेः

सीतान्वेषणमादिशन् दिशतु वो रामः सहर्षः श्रियम् ॥ १५॥

हनुमन्नाटकतः

खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम् ।

ध्रुवमुष्टिगदामुण्डं दशभिः कपिपुङ्गवम् ॥

एतान्यायुधजालानि धारयन्तं यजामहे ॥ १६॥

श्रीविद्यार्णवतः

स्वप्रभोर्वाहकश्रेष्ठः श्वेतच्छत्रितपुच्छकः ।

सुखासनमहापृष्ठः सेतुबन्धक्रियाग्रणीः ॥ १७॥

कदाऽपि शुभ्रैर्वरचामरैः प्रभुं

गायन् गुणान्वीजयति स्थितोऽग्रतः ।

कदाऽप्युपश्लोकयति स्वनिर्मितैः

चित्रैः स्तवैः श्रीहनुमान्कृताञ्जलिः ॥ १८॥

बृहद्भागवतामृततः

नखायुधाय भीमाय दन्तायुधधराय च ।

विहगाय च शर्वाय वज्रदेहाय ते नमः ॥ १९॥

ज्वलत्काञ्चनवर्णाय दीर्घलाङ्गूलधारिणे ।

सौमित्रिजयदात्रे च रामदूताय ते नमः ॥ २०॥

नारदपुराणतः

द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् ।

मौञ्जीकौपीनसहितं मां ध्यायेद्रामसेवकम् ॥ २१॥

रामरहस्योपनिषदि

श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्तने

प्रह्लादः स्मरणे, तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।

अक्रूरस्त्वभिनन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः

सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम् ॥ २२॥

शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् ।

तेजो धृतिर्यशो दाक्ष्यं सामर्थ्यं विनयो नयः ।

पौरुषं विक्रमो बुद्धिः यस्मिन्नेतानि नित्यदा ।

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।

वाल्मीकि रामायणतः ।

मरुत्सुतं रामपदारविन्दवन्दारु बृन्दारकमाशु वन्दे ।

धीशक्तिभक्तिद्युतिसिद्धयो यं कान्तां स्वकान्तामिव कामयन्ते ॥ २६॥

रामचरिताब्धिरत्नतः ।

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ।

कुण्डलद्वयसंशोभिमुखाम्बुजमहं भजे ॥ २७॥

हनूमान् रामपादाब्जसङ्गी वर्णिवरः शुचिः ।

सञ्जीवनोपहर्ता मे दीर्घमायुर्ददात्विह ॥ २८॥

श्रीतत्त्वनिधितः ।

सदा राम रामेति नामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् ।

पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम् ॥ १९॥

